# *श्री क्षिप्र फलप्रद धनलक्ष्मी स्तोत्र*

नमः सर्व स्वरूपे च नमो कल्याणदायिके
महासंपत्प्रदे देवि धनदायै नमोस्तुते ॥ 1 ॥

महाभोगप्रदे देवि महाकामप्रपूरिते
सुखमोक्षप्रदे देवि धनदायै नमोस्तुते ॥ 2 ॥

ब्रह्मरूपे सदानन्दे सच्चिदानन्दरूपिणी
धृतसिद्धिप्रदे देवि धनदायै नमोस्तुते ॥ 3 ॥

उद्यत्सूर्यप्रकाशाभे उद्यदादित्यमण्डले
शिवतत्वप्रदे देवि धनदायै नमोस्तुते ॥ 4 ॥

शिवरूपे शिवानन्दे कारणानन्दविग्रहे
विश्वसंहाररूपे च धनदायै नमोस्तुते ॥ 5 ॥

पंचतत्वस्वरूपे च पंचाचारसदारते
साधकाभीष्टदे देवि धनदायै नमोस्तुते ॥ 6 ॥